कर्नाटक सर्कार

# संस्कृतलहरी

## प्रथमभाषा-उपपठ्यपुस्तकम्

नवमकक्ष्या

9

कर्नाटक सरकार
राज्य शैक्षणिक अनुसंधान एवं प्रशिक्षण (पाठ्यपुस्तक) विभाग

# संस्कृतलहरी

## प्रथमभाषा—उपपाठ्यपुस्तकम्

### नवमकक्ष्या



लेखनसाधन प्रकाशन मुद्रण निदेशालय
(पाठ्यपुस्तक)

# संस्कृतलहरी


रचना

१. श्री. जि. चन्नवीरस्वामी — अध्यक्षः

२. श्री. बि. एस्. झुञ्जरवाडः — सदस्यः

३. श्री. दोड्डहनुमन्तरायप्पा — ,,

परिशीलनम्

१. श्री. एच्. बी. राजु

२. श्री. पि. एन्. शास्त्री



एतत् पुस्तकरचनायां अनेकविधसाहाय्यं कृतवद्भ्यः सर्वेभ्यः पठ्यपुस्तकनिदशनालयोऽयं कृतज्ञतामर्पयति ।

पठ्यपुस्तकनिर्देशकः ।

# अनुक्रमणिका

# अनुशासनम्

'ಅನುಶಾಸನಂ' ಎಂಬ ಭಾಗವನ್ನು ತೈತ್ತಿರೀಯ ಉಪನಿಷತ್ತಿನಿಂದ ಆರಿಸಿದೆ. ಪ್ರಾಚೀನ ಕಾಲದಲ್ಲಿ ಶಿಷ್ಯರು ಗುರುಕುಲದಲ್ಲಿ ಅಭ್ಯಾಸವನ್ನು ಪೂರ್ತಿ ಮಾಡಿದ ನಂತರ ಕುಲಪತಿಯು ಅವರಿಗೆ ಸ್ನಾತಕೋತ್ತರ ಉಪದೇಶವನ್ನು ನೀಡುವುದು ಪದ್ಧತಿಯಾಗಿದ್ದಿತು. ಇದು ಅಂತಹ ಒಂದು ದೀಕ್ಷಾಂತ ಉಪದೇಶ. ಇದರಲ್ಲಿ ಸಾಮಾನ್ಯವಾಗಿ ವಿದ್ಯೆಯನ್ನು ಮುಗಿಸಿದ ವಿದ್ಯಾರ್ಥಿಗಳು ಮುಂದೆ ತಮ್ಮ ಜೀವನದಲ್ಲಿ ಹೊಂದಿಸಿಕೊಳ್ಳಬೇಕಾದ ರೀತಿ ನೀತಿಗಳನ್ನು ಕುರಿತು ಉಪದೇಶಿಸಲ್ಪಟ್ಟಿದೆ.

वेदं अनूच्य आचार्यः अन्तेवासिनं अनुशास्ति । सत्यं वद । धर्मं चर । स्वाध्यायात् मा प्रमदः । आचार्याय प्रियं धनं आहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः । सत्यात् न प्रमदितव्यम् । धर्मात् न प्रमदितव्यम् । कुशलात् न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव । यानि अनवद्यानि कर्माणि तानि सेवितव्यानि, नो इतराणि । यानि अस्माकं सुचरितानि तानि त्वया उपास्यानि, नो इतराणि ।

श्रद्धया देयम् । अश्रद्धया अदेयम् । श्रिया देयम् । ह्रिया देयम् । भिया देयम् । संविदा देयम् ।

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र पण्डिताः सम्मर्शिनः, युक्ताः आयुक्ताः अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तथाः ।

एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवं च एतदुपास्यम् ।

## ಕಠಿಣ ಪದಗಳ ಅರ್ಥ

अनूच्य = ಅಧ್ಯಯನವನ್ನು ಪೂರ್ತಿಮಾಡಿ

अन्तेवासिन् = ವಿದ್ಯಾರ್ಥಿ

मा प्रमदः = ನಿರ್ಲಕ್ಷಿಸಬೇಡ

भूत्यै = ಮಂಗಳಕ್ಕಾಗಿ

अनवद्यम् = ಶುದ್ಧವಾದ

संविदा = ತಿಳುವಳಿಕೆಯಿಂದ

वृत्तविचिकित्सा = ಆಚಾರದಲ್ಲಿ ಸಂಶಯ

वेदोपनिषत् = ವೇದದ ರಹಸ್ಯ

सम्मर्शिनः = ವಿಚಾರವಂತರು

आयुक्ताः = ಅಧಿಕೃತರು

ह्री = ಲಜ್ಜೆ

वृत्तम् = ವ್ಯವಹಾರ

अलूक्षाः = ಮೃದುಹೃದಯಿಗಳು

श्रिया = ಔದಾರ್ಯದಿಂದ (ಗೌರವದಿಂದ)

ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ಉತ್ತರಿಸಿರಿ :—

1. कः अत्र उपदिशति ?
2. कस्मात् न प्रमदितव्यम् ?
3. कानि कर्माणि सेवितव्यानि ?

ಕನ್ನಡದಲ್ಲಿ ಉತ್ತರಿಸಿರಿ :—

1. ಉಪನಿಷತ್ ಎಂದರೇನು ?
2. ಶಿಷ್ಯನು ವಿದ್ಯಾರ್ಜನೆಯನಂತರ ಮಾಡಬೇಕಾದ ಕಾರ್ಯವೇನು ?
3. ಶಿಷ್ಯನು ಯಾವುದರ ಬಗ್ಗೆ ವಿಶೇಷ ಗಮನ ಕೊಡಬೇಕು ?
4. ನಿಜವಾದ ದೇವತೆ ಯಾರು ? ಏಕೆ ?
5. ದಾನದ ಬಗ್ಗೆ ಏನು ಉಪದೇಶಿಸಲಾಗಿದೆ ?

* * * *

# भारतरत्नं लालबहादुर शास्त्री

परिवर्तिनि संसारे मृतः को वा न जायते ।
स जातो येन जातेन याति देशः समुन्नतिम् ।।

वयं भारतदेशे वसामः । पुरा अयं देशः पराधीन आसीत् । अत्र वैदेशिकानां राज्यमासीत् । आंग्लाः जनाः भारतस्य शासकाः अभवन् । भारतस्य जनता तेषां अत्याचारान् नासहत । देशं स्वतन्त्रं कर्तुं जनाः प्रायतन्त । देशस्य सर्वेषु प्रदेशेषु नेतारः समभवन् । तादृशनेतृषु श्रीमान् लालबहादुर शास्त्री अन्यतमः आसीत् ।

भारतस्य उत्तरप्रदेशे 'वाराणसी' इति पुण्यक्षेत्रं अस्ति । एतत्प्रसिद्धं यात्रास्थलम् । तत्र शारदाप्रसादः-रामदुलारीदेवीति दम्पती प्रतिवसतः स्म । तयोः द्वे दुहितरौ एकः सुतः च आसन् । स एव पुत्रः अस्माकं लालबहादुरः । २–१०–१९०४ तमे दिनाङ्के लालबहादुरस्य जन्म अभवत् ।

शारदाप्रसादः सर्वकारीयसेवायां आसीत् । स्वस्य वेतनेन कुटुम्बरक्षणं करोति स्म । यदा लालबहादुरः सार्धैकहायनः अभवत् तदा तस्य जनकः दिवं गतः । तस्य जननी अनाथा अभवत् । सा तमादाय मोगलसराई-पत्तने स्थितं पितृगृहं आगता । बालः कौमार्ये एव पितृवात्सल्यवञ्चितः अभवत् । अनन्तरं मातामहेन पोषितः । तत्रैव प्राथमिकीं शिक्षां अध्यगच्छत् । तस्य मातुलः काशीपत्तने आसीत् । काशीं गत्वा माध्यमिकीं शिक्षां अविन्दत । यदा षोडशे वयसि प्रौढशालायां अभ्यसति स्म तदा अध्ययने अतीव निपुणः एषः 'मेधावी छात्रः' इति प्रशंसां अलभत । आंग्लभाषेतिहासयोः तस्य अतीव आसक्तिः आसीत् । सः आचार्याणां प्रियच्छात्रः अभवत् । एतस्मिन् वर्षान्ते एव तस्य पुरतः राष्ट्रसेवाप्रश्नः उदभवत् । एकत्र अध्ययनं अन्यत्र राष्ट्रसेवा च । अहोरात्रं विचिन्त्य राष्ट्रसेवामेव अङ्गीचकरोत् । महात्मागान्धी प्रभृतिभिः उद्घोषिते स्वातन्त्र्ययुद्धे स्वप्रेरणया प्राविशत् ।

"सुतः परीक्षायां उत्तीर्णो भविष्यति, सर्वकारीयं उद्योगं प्राप्स्यति, वेतनं लब्ध्वा कुटुम्बपोषणं च करिष्यति" इति तस्य माता दृढं निश्चयवती आसीत्। किन्तु एकतः मातुः कुटुम्बस्य स्वस्य च संरक्षणं, अन्यतः राष्ट्रस्य स्वातन्त्र्यसेवा इति लालबहादुरस्य मनः डोलायते स्म। तस्य कुटुम्बस्य सदस्याः क्षुधापीडिताः आसन्। परं राष्ट्रस्वातन्त्र्यं तस्य मनसि प्रथमं स्थानं अविन्दत। हितचिन्तकानां आचार्याणां च कौटुम्बिकविषये उपदेशः व्यर्थः अभवत्।

लालबहादुरस्य हृदयं यथा मृदु तथा कठिनं च आसीत्। सः एकदा कृतात् निर्धारात् न कदापि विचलति स्म। तस्य मनसि राष्ट्रविषयः अतीव गुरुतरः आसीत्। राष्ट्रे बहुसंख्याकाः दीनाः सन्ति। 'दीनः एव विजानाति दीनानां कष्टम्'। अतः सः स्वदेशीयानां जनानां उद्धारार्थं प्रयत्नं कर्तुं प्रत्यजानात्। स्वातन्त्र्यविप्लवे भागं वोढुं निर्धारितवान्। एतन्मध्ये आत्मोन्नतिकृते अध्ययनमपि अकरोत्। देशीयविद्याध्यापनार्थं "काशी विद्यापीठम्" इति एकं विद्याकेन्द्रमासीत्। लालबहादुरः १९२१ तमे क्रिस्तवर्षे तस्मिन् विद्यापीठे प्रवेशं लब्धवान्। तत्र अनेके विद्वांसः आसन्। तेषां संपर्कात् देशीयसाहित्यं संस्कृतिं भाषां च सम्यक् अधीतवान्। अन्ते 'शास्त्री' पदवीं अलभत। तदनन्तरं तस्य नाम 'लालबहादुर शास्त्री' इत्यभवत्।

लालबहादुर शास्त्री महाभागस्य भारतीयसंस्कृतौ संस्कृतभाषायां च अतीव प्रीतिः आसीत्। न तु केवला प्रीतिः, तयोः सुपरिचयोऽपि आसीत्। अतः संस्कृतप्रचारप्रवृत्तानां संस्थानां कृते साहाय्यं अकरोत्। लालबहादुरस्य प्रशान्तः स्वभावः सर्वान् आकर्षति स्म। सः गर्वरहितः आसीत्। एतादृशस्य महानायकस्य राष्ट्रकार्याणि दृष्टिपथं आयान्ति। स उदारचरितः आसीत्। अतः 'भारतसेवकसंघस्य' सदस्यः अभवत्। संघद्वारा समाजसेवां कर्तुं निश्चितवान्। भारतदेशः महात्मा गान्धी, जवहरलाल नेहरु इत्यादिनेतॄणां प्रयत्नेन १९४७ तमे वर्षे स्वातन्त्र्यमलभत। जवहरलाल नेहरुः स्वतन्त्रभारतस्य प्रथमः प्रधानसचिवः अभवत्। तदा स्वातन्त्र्यरक्षणमेव मुख्यं कार्यं आसीत्।

१९५२ तमे वर्षे प्रजाप्रभुत्वरीत्या प्रशासनं प्रारभत । तदा 'अखिलभारत-कांग्रेस्मण्डले' शास्त्री महाभागः सक्रियपात्रमावहत् । नेहरुसचिवमण्डले शास्त्रीमहोदयः धूमशकटविभाग-सचिवः अभवत् । तमिलुनाडुप्रदेशे धूमशकट-दुर्घटना सञ्जाता । तस्मिन् आत्मानं दोषभाजं मत्वा सचिवपदात् निरगच्छत् । अहो ! निष्ठा शास्त्रीवरस्य प्रजातन्त्रनियमानुसरणे ।

जवहरलाल नेहरुः राष्ट्रहितार्थं सेवाकांक्षिणं जनं केन्द्रप्रभुत्वे न्ययोजयत । तदा गृहमन्त्रिपदे नन्तरं वाणिज्यमन्त्रिपदे शास्त्री महाभागः नियुक्तः । कामराज नाडर् सूत्रमनुसृत्य सचिवपदं अत्यजत् । शास्त्रीमहाभागः वागाडंबरं विना कार्यं सम्यक् अकरोत् । तस्मिन् जटिलानां समस्यानां भेदने सामर्थ्यं अवर्तत । अतः नेहरु एनं पुनः मन्त्रिपदे स्व्यकरोत् । तदा अतीव जटिलाः समस्याः उद्भूताः आसन् ।

नेहरु नन्तरं को वा प्रधानमन्त्रिपदं स्वीकर्तुं क्षमः इति प्रश्नः समुद्भूतः । भारतीय-नेतारो जनाश्च विचारविमूढाः अभवन् । विचक्षणेन कामराजेन अजातशत्रुः, पक्षप्रतिपक्षमान्यः, कार्यपटुः, शास्त्रीमहाभागः एव समर्थः इति सूचितं सर्वैः अनुमोदितः । एवं १९६४ तमे वर्षे प्रधानमन्त्रिपदे व्यराजत । तदा भारते भाषाविवादः आसीत् । अन्नसमस्या तीव्रतरा आसीत् । एकत्र पाकिस्थानस्य कछ् आक्रमणं, अन्यत्र काश्मीरनेतणां मिथः कलहः च आस्ताम् । सर्वाः एताः समस्याः बुद्धिपाटवेन प्रशमित. शास्त्रि-महोदयेन । तस्य सत्वस्य पराकाष्ठा काश्मीराक्रमणेन भृशं प्रकाशिता । चीना-पाक्राष्ट्राभ्यां युगपत् आक्रमणं अभवत् । तदा दृढं धैर्यं अवलम्ब्य तत्प्रतीकाराय सैन्यं प्रजाश्च उदबोधयत् । कदापि तस्य वाणी न कुण्ठिता आसीत् ।

लालबहादुरशास्त्री प्रकृत्या शान्तः सरलः च आसीत् । तत्र कारणं भारतीयसंस्कारेण संस्कृता बुद्धिः इति तु सर्वविदितम् । आकारेण वामनोऽपि मनोदार्ढ्येन हिमवान् इव आसीत् । सः राष्ट्रकृते स्वजीवितकाले निस्स्वार्थसेवामकरोत् । सः महात्मनो गान्धिनः मार्गावलम्बी खलु । अतः राजकार्यार्थं १९६५ तमे वर्षे रष्या-देशमगच्छत् । यथासम्भवं भारत-

हितानुपायान् च आयोजयत् । रष्यादेशात् आगमनात्पूर्वं अकस्मादेव दिवं गतः । अष्टादशसु मासेषु अनुपमं कार्यमकरोत् ।

को वा विजानाति विधेः वक्रं क्रमम् । श्रीलालबहादुर शास्त्री स्वजीवितकाले यथा उक्तिः तथाकरोत् । जनसेवैव जनार्दनसेवेति परं निष्ठया अजीवत् । तस्य आचारात् जनाः स्फूर्तिं लभन्ते । एतेन प्रदर्शितं मार्गं अनुसराम ।

## ಕಠಿಣ ಪದಗಳ ಅರ್ಥ

विप्लवः—ಯುದ್ಧ, धूमशकटः —ರೈಲುಗಾಡಿ, मिथः कलहः –ವ್ಯರ್ಥವಾದ ಜಗಳ वामनः—ಕುಳ್ಳ.

I ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ಉತ್ತರಿಸಿರಿ :—

(1) लालबहादुरः कस्य पुत्रः ?

(2) लालबहादुरस्य मातुः आशा किं आसीत् ?

(3) श्रीशास्त्री धूमशकटसचिवपदवीं किमर्थं अत्यजत् ?

(4) श्रीशास्त्री कदा भारतस्य प्रधानसचिवः अभवत् ?

II ಕನ್ನಡದಲ್ಲಿ ಉತ್ತರಿಸಿ :—

(1) ಲಾಲ್‌ಬಹಾದೂರರ ಬಾಲ್ಯದ ವೃತ್ತಾಂತವನ್ನು ಸಂಗ್ರಹಿಸಿ ಬರೆಯಿರಿ.

(2) ಲಾಲ್‌ಬಹಾದೂರ ಶಾಸ್ತ್ರಿಯವರ ರಾಷ್ಟ್ರೀಯ ಸೇವೆಯನ್ನು ವಿವರಿಸಿ.

(3) ಶ್ರೀಶಾಸ್ತ್ರಿಯವರು ಸರ್ಕಾರದಲ್ಲಿ ಯಾವ ಯಾವ ಅಧಿಕಾರವನ್ನು ವಹಿಸಿದ್ದರು ?

(4) ಶ್ರೀಶಾಸ್ತ್ರಿಯವರು ಕೊನೆಗಾಲದವರೆಗೂ . ರಾಷ್ಟ್ರಸೇವೆಯಲ್ಲಿಯೇ ನಿರತ ರಾಗಿದ್ದರು. ಇದನ್ನು ಪುಷ್ಟೀಕರಿಸಿ.

(5) ಲಾಲ್‌ಬಹಾದೂರ ಶಾಸ್ತ್ರಿಯವರ ವ್ಯಕ್ತಿತ್ವವನ್ನು ಚಿತ್ರಿಸಿರಿ.

# बुद्धचरितम्

भागीरथ्या उत्तरे तीरे कपिलवस्तु नाम किमपि नगरं आसीत्। तत्र शाक्यवंशोत्पन्नः शुद्धोदनो नाम नृपतिः आसीत्। सः नयेन राज्यं अकरोत्। तस्य सिद्धार्थो नाम पुत्ररत्नं अजायत। शुद्धोदनस्य पुरोहितः तमकथयत्—'एषः सिद्धार्थः संसारस्य दुःखानि दृष्ट्वा संसारात् विरक्तः भविष्यति' इति। शुद्धोदनः सिद्धार्थं तथाऽपालयत् यथाऽयं किमपि दुःखं नान्वभवत्। प्रासादे एव तस्य शिक्षा अभवत्। सः राजपुत्रः बहु सुवृत्तः विवेकशाली च आसीत्। धनुर्वेदं वेदविद्यां दण्डनीतिं च असौ अध्यैत। सिद्धार्थः बाल्यादेव व्रतनिष्ठः आसीत्। सः जनानां दुःखानां हर्ता शान्तेः च स्थापकः आसीत्। तस्य आध्यात्मविद्या एतेषु विषयेषु परमप्रियतमा आसीत्। यदा यदा स मृगयायै वनमगच्छत् तदा तदा 'एते मृगाः किमर्थं हन्तव्या' इति तस्य हृदयं भूतदयया आद्रवत्। तेन कथंचित् धनुषि बाणः संहितोऽपि प्रत्याहृतः पुनः पशुषु न च निक्षिप्तः। इत्थं बहुवारं असौ विपिने नगरे वा विहरन् परदुःखेन दुःखितः अभवत्। 'किमर्थं शरीरिणः दुःखं अनुभवन्ति। कथं च तस्योपशमः भवेत्' इति तस्य मानसं अनिशं चिन्ताकुलं आसीत्।

पित्रा अष्टादश वर्षीयस्य सिद्धार्थस्य विवाहः सम्पादितः। यशोधरा नाम तस्य पत्नी सुशीला सुरूपा च आसीत्। नव वर्षानन्तरं तयोः पुत्ररत्नमजायत। तस्य जन्मोत्सवः महानासीत्। तेन सर्वे जनाः सन्तुष्टाः। तदा नृपकुलं आनन्दस्य परां कोटिं अभजत्। किन्तु सिद्धार्थः सदा अन्तर्दृष्टिः समभावेन दिनान्यनयत्। एकदा सः नगरं द्रष्टुं अगच्छत्। तत्र गलिताङ्गं वृद्धजनं, रोगग्रस्तं पुरुषं, गतप्राणं नरं, स्थितप्रज्ञं च मुनिं अपश्यत्। तदा देवीवाणी च एवं अन्तः प्रादुरासीत्। 'सखे सिद्धार्थ, एषु दशानां प्रथमत्रिकेषु मर्त्येन दुःखमेव भोक्तव्यम्। तुरीयायां दशायां तस्य उपशमस्तु भवेत्। ततः यदुचितं तत् क्रियताम्' इति। एवमेव अहमपि

क्रमेण दुःखं अनुभवामि इति मत्वा तस्य मनसि वैराग्यं अजायत। एव व्यग्रचित्तः सिद्धार्थः दिनमेकं प्रासादे कथंचित् नीतवान्। अपरस्यां रात्रौ आप्तजनेषु सुप्तेषु सः गृहान्निरगच्छत्। शान्तेः अन्वेषणाय वनं अगच्छत्। वनात् वनं परिभ्रमन् सः कुत्रापि शान्तिं नालभत। दशवर्षपर्यन्तं तेन केचन सिद्धाः सेविताः। आत्मज्ञानं च अभ्यस्तम्। अनन्तरं सः 'गया'नामके स्थाने एकस्य वटवृक्षस्य अधः बोधं अलभत। तस्मात् कालात् सः बुद्धः इति प्रसिद्धः अभवत्। अचिरात् च जनानां पूजास्थानं अजायत।

अमुना बुद्धेन तदनन्तरं स्वानुभवो लोकेभ्यः निवेदितः। धर्मतत्त्वानि च निरूपितानि। 'निष्फलं यज्ञकर्म, वर्णभेदा निराधाराश्च' इति तेन सनातनधर्मस्य दोषौ प्रदर्शितौ। सत्यनिष्ठा, भूतदया, सदाचारः, संसारत्यागश्चेति चत्वारि स्वधर्मस्य तत्त्वानि निर्दिष्टानि। भगवान् बुद्धः लौकिक्या पालिभाषया एवं उपादिशत्। तस्मात् सामान्यैः जनैः तस्य धर्मः सोत्साहं स्वीकृतः। तदा बुद्धः यं धर्मं उपादिशत् स एव धर्मः "बौद्धधर्मः" इति प्रख्यातिं अलभत। पश्चात् राजाश्रयं लब्ध्वा विविधेषु देशेषु स धर्मः विस्तारं अलभत।

### ಕಠಿಣಪದಗಳ ಅರ್ಥ

उपशमः = ಶಾಂತಿ. गलितम् = ಜೀರ್ಣವಾದ. तुरीयः = ನಾಲ್ಕನೆಯ.

I. ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ಉತ್ತರ ಬರೆಯಿರಿ :—

(1) सिद्धार्थः कुत्र अवसत् ?
(2) कः सिद्धार्थस्य पिता ?
(3) का विद्या तस्य प्रियतमा ?
(4) तस्य मनः किमर्थं अनिशं चिन्ताकुलं आसीत् ?

II. ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಉತ್ತರ ಬರೆಯಿರಿ :—

(1) ಸಿದ್ಧಾರ್ಥನು ಏತಕ್ಕಾಗಿ ಮನೆಯಿಂದ ಹೊರಟುಹೋದನು ?
(2) ಸಿದ್ಧಾರ್ಥನಿಗೆ ವೈರಾಗ್ಯ ಬರಲು ಕಾರಣವೇನು ?
(3) ಸಿದ್ಧಾರ್ಥನು (ಗೌತಮ) ಬುದ್ಧನಾದುದು ಹೇಗೆ ?
(4) ಬೌದ್ಧಧರ್ಮದ ಪ್ರಸಿದ್ಧ ತತ್ತ್ವಗಳನ್ನು ತಿಳಿಸಿ.

• • • •

# क्रौञ्चप्रश्नाः

पुरा पाण्डवाः राज्यभ्रष्टाः अभवन्। निवासाय स्थलं अन्वेष्टुं इतस्ततः पर्यभ्रमन्। मध्याह्नकाले तैः कस्यचित् तरोः मूले आश्रयः कृतः। सन्निधौ पतितानि कानिचित् फलानि भक्षितानि। परं न कुत्रापि जलं दृष्टम्। अचिरादेव द्रौपदी पिपासया शुष्कमुखी अभवत्। तां दृष्ट्वा युधिष्ठिरः सहदेवं आह—'अयि वत्स! तरुशिखरं आरुह्य समीपे कोऽपि जलाशय वर्तते न वा इति समीक्षस्व'। तत् अग्रजस्य वचनं आकर्ण्य सहदेवः शीघ्रं वृक्षं आरोहत्। अनतिदूरे सूर्यकिरणैः प्रकाशमानं कासारं च अपश्यत्। सहदेवः तं तड़ागं प्राप्य जलं पातुं हस्तौ प्रासारयत्। तदा रक्तशिखां मस्तके धारयन् कश्चित् शुभ्रवर्णः क्रौञ्चः अवदत्। 'विरम रे वत्स! पयःपानात् विरम। प्रथमं मे प्रश्नानां उत्तराणि ब्रूहि। अनन्तरं सुखेन जलं पिब' इति। तृषाकुलः सहदेवः इदं वचनं अनादृत्य पर्याप्तं जलं अपिबत्। तत्क्षणं तत्र मृतः सन् अपतत्।

ततः सहदेवः चिरं अनागत इति ज्ञात्वा नकुलः तमेव कासारं आगतः। तत्र गतासुं सहदेवं वीक्ष्य शोकार्तः स बहुव्यलपत्। क्रौञ्चः तमपि कथितवान्। 'प्रथमं उदकं मा स्पृश। मह्यं प्रतिवचनं देहि' इति। नकुलोऽपि तस्मिन् अवहितो नाभवत्। पिपासार्दितः जलप्राशनं आरभत, सपद्येव अम्रियत च। ततः भीमार्जुनौ अपि तत्र गतौ! कृतपानौ तौ अपि च गतप्राणौ भूम्यां पतितौ। ततः चिन्ताकुलः युधिष्ठिरः स्वयं जलमानेतुं प्रस्थितः। तडागस्य तीरे गतासून् चतुरो भ्रातॄन् आलोकयत्। भृशं शोकाकुलः असौ तेषां मुखेषु जलसेचनं कर्तुं ऐच्छत्। ततः तेन क्रौञ्चेन पूर्ववत् उक्तम्। तदाकर्ण्य जितेन्द्रियः सः धर्मराजः तं प्रार्थयत। 'उच्यन्तां भो भवतः प्रश्नाः। केनापि महत्मना भवता भाव्यम्। सामान्याः खगाः एवं न भाषन्ते' इति।

क्रौञ्चः—कथं नु मनुजः पण्डितः भवेत्?

धर्मः—वेदविद्यायाः अभ्यसनेन खलु।

क्रौञ्चः—कोऽसौ धनसम्पन्नः सुभूषितः अपि श्रीमान् न भवेत् ?

धर्मः—यो नाम दीनेभ्यो द्रव्यं न ददाति ।

क्रौञ्चः—किं खलु तत् स्यात् यत् विश्वस्मादपि गुरुतरं, मेघादपि च उच्चतरम् ?

धर्मः—नूनं मातापित्रोः वात्सल्यम् ।

क्रौञ्चः—कस्य नयने न कदापि निमीलतः ?

धर्मः—मत्स्यस्य ।

क्रौञ्चः—कोऽसौ सुखप्राप्तेः मार्गः ?

धर्मः—सत्यवचनं, भूतदया च ।

क्रौञ्चः—किं नाम ब्राह्मणस्य सत्स्वरूपम् ?

धर्मः—न केवलं वेदपठनं, नापि सन्ध्यावन्दनम्, परं सदाचारः ।

क्रौञ्चः—तव उत्तरैः प्रीतोऽस्मि । वरं वृणीष्व, जलं च पिब ।

धर्मः—तव कृपया मे चत्वारो भ्रातरः जीवन्तु ।

क्रौञ्चः—तथास्तु ।

तत्क्षणं युधिष्ठिरस्य अनुजाः संज्ञां लब्ध्वा उदतिष्ठन् । सर्वे यथेष्टं तत् निर्मलोदकं पीत्वा द्रौपद्यै किञ्चित् अनयन् । तत्सरसः समीपे सुखेन च निवासमकुर्वन् ।

## ಕಠಿಣಪದಗಳ ಅರ್ಥ

अनादृत्य:=ಮನ್ನಿಸದೆ, ಗೌರವಿಸದೆ. अवहित:=ಗಮನವಿಟ್ಟವನು.

ಸಂಸ್ಕೃತದಲ್ಲಿ ಉತ್ತರಿಸಿರಿ :—

1. किमर्थं पाण्डवाः वनं अगच्छन् ?
2. कीदृशः क्रौञ्चः ?
3. कीदृशः युधिष्ठिरस्य स्वभावः ?

ಕನ್ನಡದಲ್ಲಿ ಉತ್ತರವನ್ನು ಬರೆಯಿರಿ :—

1. ಪಾಂಡವರು ಸರೋವರವನ್ನು ಹೇಗೆ ಕಂಡರು ?
2. ನೀರಿಗಾಗಿ ಹೋದ ನಾಲ್ವರು ತಮ್ಮಂದಿರ ಪರಿಣಾಮ ಏನಾಯಿತು ?
3. ಕ್ರೌಂಚ ಮತ್ತು ಯುಧಿಷ್ಠಿರರಲ್ಲಿ ನಡೆದ ಸಂಭಾಷಣೆಯನ್ನು ವಿವರಿಸಿ.

• • • •

# शबर्युपाख्यानम्

ಈ ಭಾಗವನ್ನು ಅಧ್ಯಾತ್ಮರಾಮಾಯಣದಿಂದ ಆರಿಸಿದೆ.

कृतातिथ्यं रघुश्रेष्ठं उपविष्टं सहानुजम् ।
शबरी भक्तिसंपन्ना प्राञ्जलिर्वाक्यमब्रवीत् ॥ १ ॥

अत्राश्रमे रघुश्रेष्ठ गुरवो मे महर्षयः ।
स्थिताः, शुश्रूषणं तेषां कुर्वती समुपस्थिता ॥ २ ॥

वहुवर्षसहस्राणि, गतास्ते ब्रह्मणः पदम् ।
गमिष्यन्तोऽब्रुवन् ते मां वसात्रैव समाहिता ॥ ३ ॥

रामो दाशरथिर्जातः परमात्मा सनातनः ।
राक्षसानां वधार्थाय ऋषीणां रक्षणाय च ॥ ४ ॥

आगमिष्यति चकाग्र्यध्याननिष्ठा स्थिरा भव ।
इदानीं चित्रकूटाद्रौ आश्रमे वसति प्रभुः ॥ ५ ॥

यावदागमनं तस्य तावद्रक्ष कलेवरम् ।
दृष्ट्वैव राघवं देहं दग्ध्वा यास्यसि तत्पदम् ॥ ६ ॥

तथैवाकरवं राम त्वद्ध्यानैकपरायणा ।
प्रतीक्ष्यागमनं तेऽद्य सफलं गुरुभाषितम् ॥ ७ ॥

कथं रामाद्य मे दृष्टः त्वं मनोवागगोचरः ।
स्तोतुं न जाने देवेश किं करोमि प्रसीद मे ॥ ८ ॥

श्रीराम उवाच :—

यज्ञदानतपोभिर्वा वेदाध्ययनकर्मभिः ।
नैवद्रष्टुमहं शक्यो मद्भक्तिविमुखैः सदा ॥ ९ ॥

तस्माद्भामिनि वक्ष्येऽहं इदानीं भक्तिसाधनम् ।
सतां सङ्गतिरेवात्र साधनं प्रथमं स्मृतम् ॥ १० ॥

यस्मान्मद्भक्तियुक्ता त्वं ततोऽहं त्वामुपस्थितः ।
इतो मद्दर्शनान्मुक्तिस्तव नास्त्यत्र संशयः ॥ ११ ॥

श्रुत्वा सा रामवचनं प्रविवेश हुताशनम् ।
तत्क्षणं तत्प्रसादाच्च प्राप मोक्षं सुदुर्लभम् ॥ १२ ॥

### ಕಠಿಣಪದಗಳ ಅರ್ಥ

उपविष्टः—ಕುಳಿತುಕೊಂಡ. प्राञ्जलिः—ಕೈಮುಗಿದು. अद्रिः—ಪರ್ವತ.
हुताशनः—ಅಗ್ನಿ.

ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ಉತ್ತರಿಸಿ :—

(1) शबरी कुत्र अवसत् ? (2) सा किमकरोत् तत्र ?
(3) प्रथमं भक्तिसाधनं किम् ?

ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಉತ್ತರಿಸಿರಿ :—

(1) ಶಬರಿಯು ಆಶ್ರಮದಲ್ಲಿ ವಾಸಿಸಲು ಕಾರಣವೇನು ?
(2) ಶಬರಿಯು ರಾಮಚಂದ್ರನಿಗೆ ಏನು ಹೇಳಿದಳು ?
(3) ಶಬರಿಗೆ ರಾಮಚಂದ್ರನ ಉಪದೇಶವೇನು ?
(4) ಶಬರಿಗೆ ಮುಕ್ತಿಯು ಹೇಗೆ ದೊರೆಯಿತು ?

* * * *

# चत्वारो मूर्खपण्डिताः

ಪುಸ್ತಕವನ್ನು ಓದಿ ತಿಳಿದರೆ ಮಾತ್ರ ಸಾಲದು. ಅದರ ಮಹತ್ವವನ್ನು ತಿಳಿದು ಜೀವನದಲ್ಲಿ ಅದನ್ನು ಸರಿಯಾಗಿ ಉಪಯೋಗಿಸಿಕೊಳ್ಳುವ ಜಾಣ್ಮೆ ಬೇಕು. ಅದಿಲ್ಲದಿದ್ದರೆ ಓದು ವ್ಯರ್ಥವಾಗುತ್ತದೆ; ಅಪಹಾಸ್ಯಕ್ಕೆ ಕಾರಣವಾಗುತ್ತದೆ. ಹಾಗೆ ಅಪಹಾಸ್ಯಕ್ಕೆ ಗುರಿಯಾದ ನಾಲ್ವರು ಮೂರ್ಖರ ಕಥೆ ಇದು.

अपि सर्वेषु शास्त्रेषु कुशलाः लोकाचारविवर्जिताः ।
सर्वे ते हास्यतां यान्ति यथा ते मूर्ख-पण्डिताः ॥

कस्मिंश्चिज्जनपदे चत्वारः छात्राः परस्परं मित्रभावं आपन्नाः वसन्ति स्म । बालभावे तेषां मतिः अजायत । भो देशान्तरं गत्वा विद्यायाः

आर्जनं कुर्मः । अथ अन्यस्मिन् दिने ते परस्परं निश्चयं कृत्वा विद्योपार्जनार्थं कान्यकुब्जं गताः । तत्र च विद्यामठे गत्वा पठन्ति । एवं द्वादशवर्षं अध्ययनं कृत्वा विद्याकुशलाः ते सञ्जाताः । ततः तैः चतुर्भिः मिलित्वा उक्तम् । वयं सर्वविद्यापारे गताः । तदुपाध्यायं आमन्त्र्य स्वदेशं गच्छामः । ततः ते उपाध्यायं उत्कलापयित्वा अनुज्ञां लब्ध्वा पुस्तकानि च नीत्वा प्रचलिताः ।

यावत् किंचिन्मार्गं यान्ति तावत् द्वौ पन्थानौ समायातौ । उपविष्टाः सर्वे । तत्रैकोऽवदत् । केन मार्गेण गच्छामः ? एतस्मिन् समये तस्मिन् पत्तने कश्चित् वणिक्पुत्रो मृतः । तस्य दाहार्थे महाजनो गतोऽभवत् । ततः चतुर्णां मध्यादेकेन पुस्तकमवलोकितम् । 'महाजनो येन गतः स पन्थाः" इति तन्महाजनमार्गेण गच्छामः । अथ ते पण्डिताः यावत् महाजनमेलापकेन सह यान्ति तावत् रासभः कश्चित् तत्र श्मशाने दृष्टः । अथ द्वितीयेन पुस्तकमालोक्य पठितम्—

आतुरे व्यसने प्राप्ते दुर्भिक्षे शत्रुसङ्कटे ।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥

तदयं अहो अस्मदीयः बान्धवः । ततः कश्चित् तस्य ग्रीवायां लगति । कोऽपि पादौ प्रक्षालयति । अथ यावद्दिशावलोकनं ते पण्डिताः कुर्वन्ति तावत्कश्चित् उष्ट्रो दृष्टः । तैश्च उक्तम् । एतत् किं ? तावत् तृतीयः पुस्तकमुद्घाटयावदत् 'धर्मस्य त्वरिता गतिः ।' एष धर्मः तावत् । चतुर्थः उवाच 'इष्टं धर्मेण योजयेत्' । अथ तैः रासभः उष्ट्रग्रीवायां बद्धः । केनचित् तत् रजकस्याग्रे कथितम् । रजकः तेषां मूर्खपण्डितानां प्रहाराय समायातः । ते तदा सर्वे पलायन्त ।

यावदग्रे स्तोकं मार्गं यान्ति तावत् काचिन्नदी लब्धा । तदा तस्याः जलमध्ये पलाशपत्रं आयातं दृष्ट्वा एकेन पण्डितेन उक्तम्—'आगमिष्यति यत्पत्रं तदस्मान् तारयिष्यति' एतत् कथयित्वा तत्पत्रस्योपरि पतितः सः नद्या च नीयते स्म । तदा नीयमानं तं अवलोक्य अन्येन पण्डितेन उक्तम्—

सर्वनाशे समुत्पन्ने अर्धं त्यजति पण्डितः ।
अर्धेन कुरुते कार्यं सर्वनाशो हि दुःसहः ॥

इत्युक्त्वा तस्य शिरश्छेदः कृतः ।

अथ पश्चात्तैः गत्वा कश्चित् ग्रामः प्राप्तः। तेऽपि ग्रामीणैः पण्डिताः इति गौरवेण निमन्त्रिताः पृथक्पृथक् गृहेषु नीताः। ततः एकस्य सूत्रिका घृतखण्डसंयुक्ता भोजने दत्ता। ततः विचिन्त्य पण्डितेन प्रोक्तम्—'दीर्घसूत्री विनश्यति'। एवमुक्त्वा भोजनं परित्यज्य गतः।

तदा द्वितीयस्य मण्डकाः दत्ताः। सोऽवदत्—'अतिविस्तरविस्तीर्णं न तद् भवेत् चिरायुषम्।' स च भोजनं त्यक्त्वा गतः।

अथ तृतीयस्य वटिकाभोजनं दत्तम्। तत्रापि पण्डितेनोक्तम्—'छिद्रेष्वनर्थाः बहुलीभवन्ति'। स च गतः।

एवं ते त्रयोऽपि पण्डिताः क्षुत्क्षाम कण्ठाः लोकैः हास्यमानाः स्वदेशं गताः।

## ಕಠಿಣಪದಗಳ ಅರ್ಥ

आमन्त्र्य = ಬೀಳ್ಕೊಂಡು. उत्कलापयित्वा = ಸಂತೋಷಪಡಿಸಿ. मेलापकं = ಸಮೂಹ. रासभः = ಕತ್ತೆ. उष्ट्रः = ಒಂಟೆ. ग्रीवा = ಕೊರಳು. रजकः = ಅಗಸ. पत्रं = (1) ವಾಹನ, (2) ಎಲೆ. सूत्रिका = ಶಾವಿಗೆ. मण्डकाः = ಮಂಡಿಗೆ. वटिका = ದೋಸೆ. बहुलीभवन्ति = ವೃದ್ಧಿಯಾಗುತ್ತವೆ. क्षुत्क्षामकण्ठाः = ಹಸಿವೆಯಿಂದ ಬಳಲಿದವರು.

ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ಉತ್ತರಿಸಿರಿ :—

(1) छात्राः कान्यकुब्जं किमर्थं गताः ?
(2) रासभः कुत्र दृष्टः ?
(3) पलाशपत्रं कुत्र आयातम् ?

ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಉತ್ತರಿಸಿರಿ :—

(1) ಪಂಡಿತರು ಶ್ಮಶಾನಕ್ಕೆ ಏಕೆ ಹೋದರು ?
(2) ಕತೆಯನ್ನು ಅವರು ಗೌರವಿಸಲು ಕಾರಣವೇನು ?
(3) ಒಬ್ಬನ ಶಿರಶ್ಛೇದವನ್ನು ಏಕೆ ಮಾಡಲಾಯಿತು ?
(4) ಮೂವರೂ ಊಟವನ್ನು ಬಿಟ್ಟು ಹೋಗಲು ಕಾರಣವೇನು ?
(5) ಈ ಪಾಠದ ನೀತಿಯೇನು ?

ಇಲ್ಲಿ ಬಂದ ಸುಭಾಷಿತಗಳ ಸರಿಯಾದ ಅರ್ಥವನ್ನು ತಿಳಿದುಕೊಳ್ಳಿರಿ.

# जीमूतवाहनः

ವಿದ್ಯಾಧರ ಚಕ್ರವರ್ತಿಯಾದ ಜೀಮೂತಕೇತುವಿನ ಪುತ್ರನು ಜೀಮೂತವಾಹನ. ಸ್ವಭಾವದಿಂದಲೇ ಪರಮ ದಯಾಳುವೂ, ಕರುಣಾಪೂರ್ಣ ಹೃದಯಿಯೂ ಆಗಿದ್ದನು. ತಂದೆಯ ಆಜ್ಞೆಯಂತೆ ಮಲಯವತಿ ಎಂಬ ಸಿದ್ಧರಾಜನ ಪುತ್ರಿಯನ್ನು ಮದುವೆಯಾಗಿದ್ದನು. ಆವಳ ತಮ್ಮ ಮಿತ್ರಾವಸು. ಲಗ್ನಾನಂತರದಲ್ಲಿ ಒಮ್ಮೆ ಆವನು ಸಮುದ್ರವಿಹಾರಕ್ಕೆ ಹೋದಾಗ ಅಲ್ಲಿ ಗರುಡ ನಿಂದ ಹತವಾದ ಹಾವುಗಳ ಎಲುವುಗಳ ರಾಶಿಯನ್ನು ಕಂಡು ಆವನ ಮನ ಕರಗಿತು. ತಾನೇ ಗರುಡನಿಗೆ ತನ್ನನ್ನು ಬಲಿ ಕೊಟ್ಟು, ನಾಗಗಳನ್ನು ಉಳಿಸಿದ ಕತೆ ಇಲ್ಲಿದೆ.

एकदा मित्रावसुना सह समुद्रवेलां द्रष्टु गतः जीमूतवाहनः जलप्रसरण-मार्गादतिक्रम्य गिरिसानुसमीपमार्गेण पर्यक्रामत्। तत्र च सर्पाणां अस्थिसंघान् अपश्यत्। शिखराकाराः उच्चाः ते। किमिदं इति मित्रावसुं अपृच्छत्। सोऽवदत्। 'इह किल वैनतेयः स्वपक्षघातेन नागलोकं सर्वं पीडयति स्म। रसातलात् उद्धृत्य एकैकं नागं आहारीकरोति। सकलनागलोकः एव विनष्टं भवेत् इत्याशङ्क्य वासुकिः गरुडं प्राह—वैनतेय, तव सन्त्रासात् सहस्रशो भुजङ्गमाः गतजीविताः। अस्माकं सन्ततिविच्छेदः, भवतां च आहारदौर्लभ्यं जायते। तस्मादेवं अनियतं मा घातं कुरु। प्रतिदिनं एकैकं तव आहारार्थं प्रेषयामि इति। गरुडः सम्मतः। यान् अहीन् पतगराजः भक्षयति तेषां अस्थ्नां सञ्चयः अयं गिरिः। तच्छ्रुत्वा अदूयत जीमूतवाहनस्य हृदयम्। जातानुकंपः उवाच—' यद्यहं मम शरीरसमर्पणेन एकस्यापि नागस्य रक्षां करोमि तर्हि धन्योऽस्मि ' इति। तदैव पित्रा आहूतः मित्रावसुः निष्क्रान्तः। जीमूतवाहनः गिरिशिखरादवरुह्य यावत्समुद्रतटमवलोकयति तदा ध्वनिमेकां अशृणोत्। 'हा पुत्रक शङ्खचूड, त्वां हन्यमानं अद्य कथं सहिष्ये ' इति। तत्र सः गतः। रुदत्या वृद्धया अनुगम्यमानं शङ्खचूडं नागं अपश्यत्। कश्चित् किङ्करः रक्तवस्त्रद्वयहस्तः तत्र आगत्य अब्रवीत्। "इदं रक्तांशुकयुग्मं परिधाय वध्यशिलामारोह। त्वां रक्तांशुकलक्षितं गरुडो गृहीत्वा आहारं करिष्यति" इति।

लतान्तरितो जीमूतवाहनः तच्छ्रुत्वा दुःखितः अभवत्। तदा शङ्खचूडः मातरमवदत्। "अंब अल दुःखेन। कस्याग्रतो रुद्यते? वासुकिना परित्यक्तस्य को वा अपरः त्राता?" इति। तत्क्षणे एव जीमूतवाहनः नन्वहं तव त्राता इति उक्त्वा सहसा उपासर्पत्। उवाच च। "अंब, एतद्वासोयुगं मह्यं अर्पय। तव पुत्रस्य जीवितं रक्षितुं अहं स्वदेहं गरुडाय ददामि" इति।

वृद्धा कर्णौ पिधाय उवाच। शान्तं पापम्। प्रतिहतं अमङ्गलम्। जात, त्वं शङ्खचूडसदृशः एव अथवा तदधिकः। यः एव बन्धुजनपरित्यक्तं मे पुत्रकं स्वशरीरदानेन रक्षितुं इच्छसि इति। शङ्खचूडोऽपि न सम्मतः। मातरं प्रणम्य भगवन्तं दक्षिणगोकर्णं प्रदक्षिणीकर्तुं अगच्छत्। तस्मिन्नेव क्षणे रक्तांशुकद्वयं जामात्रे विश्वावसुजनन्या प्रेषितम्। कञ्चुकिना तदानीतं दृष्ट्वा हृष्टः जीमूतवाहनः। अगदच्च। दिष्ट्या पूर्णा ममेच्छा। रक्तवासोयुगं परिधाय यावदसौ शङ्खचूडो नागच्छति तावद्वध्यशिलां अध्यतिष्ठत्। रक्तांबरप्रावृत्तं तं नागं मत्वा गरुडः तं गृहीत्वा आहारीकर्तुं मलयशिखरं गतः।

अत्रान्तरे शङ्खचूडः गोकर्णं प्रणम्य वध्यभूमिं न्यवर्तत। जीमूतवाहनमादाय उत्पतन्तं गरुडं ददर्श। सोऽपि अन्वधावत्। 'हा त्रिभुवनैकचूडामणे, क्व चाहं त्वां प्रेक्षिष्ये' इति तारं अक्रन्दत शंखचूडः।

गरुडोऽपि जीमूतवाहनमादाय मलयाद्रिशिखरे स्थितः तं चञ्च्वा खादितुं प्रचक्रमे। रुधिरे पीयमाने, मांसे च उत्कृत्यमानेऽपि जीमूतवाहनः प्रसन्नवदनः, अव्याकुलश्च। खगेश्वरः तद्धैर्येण विस्मितः भक्षणादुपरतो बभूव।

जीमूतवाहनः —गरुत्मन्, अद्यापि मम देहे मांसमस्ति। तवापि तृप्तिं न संलक्षये। तत् किं भक्षणात् विरतः त्वम्?

गरुडः —नूनं विस्मितोऽहं तव धैर्येण। कस्त्वं महासत्त्वः?

जीमूतवाहनः —क्षुधाकुलो भवान् न वचनयोग्यः। तत्प्रथमं मम मांसेन, शोणितेन च तृप्तो भव।

तदैव शङ्खचूडः आगत्य 'तार्क्ष्य, नायं नागः। अहमेव वासुकिना प्रेषितः तव बलिः' इति।

गरुडोऽवदत्—'उभावपि रक्तवस्त्रधारिणौ। नाहं जाने को नागः इति।

शङ्खचूडेन स्वस्तिकलक्ष्म जिह्वे फणाश्च दर्शिताः। तदा व्यथितः पक्षिराजः अपृच्छत् "तर्हि कोऽसौ मया व्यापादितः?"

"जीमूतवाहनः विद्याधरः यो मत्कृते स्वप्राणान् आर्पयत्" इति शङ्खचूडेनाभिहितम्।

ततो गरुडः पश्चात्तापस्य परां काष्ठां गतः। प्रायश्चित्तार्थं अग्निप्रवेशं कर्तुं सज्जः अभवत्। जीमूतवाहनस्य गरुडेन कर्तितानि अङ्गानि दृष्ट्वा माता गरुडं निरभर्त्सयत्। किन्तु जीमूतवाहनोऽवदत्। 'मा अंब एवम्। किमनेन कृतम्? शरीरमेव ननु ईदृश अस्थिमांसरक्तमात्रं परमार्थतः। मा कुप्य' इति। ततो गरुढं प्राह—'मा कुरु अग्निप्रवेशम्। प्रत्युत प्राणिघातमुद्दिश्य अनुतापं गच्छ। प्राणाभिघातात् विरम। यत्नेन पुण्यं संचिनु। अहिंसां चर। सर्वाणि च सत्त्वानि भीतिविरहितानि कुरु'

'अतः प्रभृति सर्वप्राणिवधात् अहं विरतः' इति गरुडः प्रतिजज्ञे। किन्तु वेदनावशात् जीमूतवाहनो गतासुः अभवत्। तदा तत्पत्नी मलयवती साक्रन्दं गौरीं प्रार्थितवती। सा प्रत्यक्षाभवत्, जीमूतवाहनं च समजीवयत्।

अत्रान्तरे गरुडोऽपि इन्द्रलोकं गत्वा अमृतमादाय तत्र मलयपर्वते असिञ्चत्। तेन सर्वेऽपि नागाः मृताः संजीविताः। आनन्देन परिपूर्णाः सर्वा दिशः। जीमूतवाहनस्य कीर्तिराचन्द्रार्कं प्रतिष्ठिता गौर्याश्च वरेण सः विद्याधरचक्रवर्तिपदे चिरं व्यराजत।

ಸಂಸ್ಕೃತದಲ್ಲಿ ಉತ್ತರಿಸಿ :—

(1) जीमूतवाहनः कस्य पुत्रः?
(2) का जीमूतवाहनस्य पत्नी?
(3) जीमूतवाहनः कं रक्षितुं ऐच्छत्?
(4) गरुडः किं प्रतिजज्ञे?
(5) जीमूतवाहनः केन सञ्जीवितः?

ಕನ್ನಡ ಭಾಷೆಯಲ್ಲಿ ಉತ್ತರಿಸಿರಿ :—

(1) ಜೀಮೂತವಾಹನನ ಹೃದಯವು ಕರಗಲು ಕಾರಣವೇನು ?
(2) ಶಂಖಚೂಡನಿಗೆ ಬಂದ ಆಪತ್ತು ಯಾವುದು ?
(3) ಗರುಡನು ಜೀಮೂತವಾಹನನನ್ನು ಏಕೆ ಎತ್ತಿಕೊಂಡು ಹೋದನು ?
(4) ಗರುಡನಿಗೆ ಪಶ್ಚಾತ್ತಾಪವೇಕಾಯಿತು ?
(5) ಜೀಮೂತವಾಹನನು ಗರುಡನಿಗೆ ಏನನ್ನು ಉಪದೇಶಿಸಿದನು ?
(6) ಗೌರೀದೇವಿಯ ಕೃಪೆ ಯಾವುದು ?
(7) ಈ ಪಾಠದ ನೀತಿಯೇನು ?

* * * *

# ಭಾಷಾಂತರ ಪಾಠಗಳು

## ಪಾಠ I

ಈ ವಾಕ್ಯಗಳನ್ನು ಕನ್ನಡಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) सतीशः पाठं पठति ।
(2) मालिनी गृहे तिष्ठति ।
(3) वृक्षात् फलं पतति ।
(4) व्याघ्रं दृष्ट्वा जनाः धावन्ति ।
(5) वने सिंहः गर्जति ।

ಸಂಸ್ಕೃತ ಭಾಷೆಗೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) ಇದು ನಮ್ಮ ದೇಶ.
(2) ಸೂರ್ಯನು ಪೂರ್ವ ದಿಕ್ಕಿನಲ್ಲಿ ಮೂಡುತ್ತಾನೆ.
(3) ರಾತ್ರಿಯಲ್ಲಿ ನಕ್ಷತ್ರಗಳು ಮಿನುಗುತ್ತವೆ.
(4) ನಿನ್ನ ಹೆಸರು ಏನು ?
(5) ಅವಳು ಶಾಲೆಗೆ ಸರಿಯಾಗಿ ಬರುತ್ತಿಲ್ಲ.

ಕನ್ನಡ ಭಾಷೆಗೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) बालकाः सायङ्काले कन्दुकेन क्रीडन्ति ।
(2) उद्याने पुष्पाणि विकसन्ति ।
(3) भक्ताः प्रतिदिनं देवालयं गच्छन्ति ।
(4) वृद्धाः यष्टिं गृहीत्वा चलन्ति ।
(5) शालायाः पुरतः उपवनं वर्तते ।

ಸಂಸ್ಕೃತಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) ಸರಳೇ, ನಿನ್ನ ವಯಸ್ಸೆಷ್ಟು?
(2) ಚಂದ್ರನಿಲ್ಲದೆ ರಾತ್ರಿ ಶೋಭಿಸುವುದಿಲ್ಲ.
(3) ಅವರು ಯಾವಾಗ ಬರುತ್ತಾರೆ ?
(4) ಅವರು ಯಾರೆಂಬುದು ನನಗೆ ಗೊತ್ತಿಲ್ಲ.
(5) ಸರೋವರದಲ್ಲಿ ಕಮಲಗಳು ಅರಳುತ್ತವೆ.

## ಪಾಠ III

ಕನ್ನಡ ಭಾಷೆಗೆ ಭಾಷಾಂತರಿಸಿ :—

(1) वृक्षाणां नीडेषु खगाः वसन्ति ।
(2) परिश्रान्ताः पथिकाः उद्यानेषु विश्रमन्ति ।
(3) भारते अनेके महाकवयः आसन् ।
(4) अहो ! अद्भुतं नाटकं कालिदासस्य ।
(5) वयं सर्वे सत्यं वदाम ।

ಸಂಸ್ಕೃತ ಭಾಷೆಗೆ ಪರಿವರ್ತಿಸಿ :—

(1) ನಮ್ಮ ರಾಷ್ಟ್ರಾಧ್ಯಕ್ಷರು ದೆಹಲಿಯಲ್ಲಿ ವಾಸಿಸುತ್ತಾರೆ.
(2) ಕಾಡಿನಲ್ಲಿ ಕ್ರೂರಪಶುಗಳು ವಾಸಿಸುತ್ತವೆ.
(3) ಅವನ ಮನೆ ಎಲ್ಲಿ ಇದೆ ಎಂಬುದು ಗೊತ್ತಿಲ್ಲ.
(4) ಈ ಪುಸ್ತಕದ ಬೆಲೆ ಹತ್ತು ರೂಪಾಯಿಗಳು.
(5) ಹಸುವಿನ ಹಾಲು ಆರೋಗ್ಯವನ್ನು ಬೆಳೆಸುತ್ತದೆ.

## ಪಾಠ IV

ಕನ್ನಡ ಭಾಷೆಗೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) रामः वनं अगच्छत् ।
(2) सा गीतं अगायत् ।
(3) मम गृहे ह्यः जन्मोत्सवः अभवत् ।
(4) सायङ्काले कुत्र आसीदुपाध्यायः ?
(5) त्वं लेखन्या विना कथं लिखसि ?

ಸಂಸ್ಕೃತ ಭಾಷೆಗೆ ಪರಿವರ್ತಿಸಿರಿ :—

(1) ಅವರು ಮನೆಗೆ ಹೋದರು.
(2) ಧನಿಕರು ಬಡವರಿಗೆ ದಾನವನ್ನು ಕೊಟ್ಟರು.
(3) ನಿನ್ನೆ ಶಾಲೆಗೆ ಏಕೆ ಬರಲಿಲ್ಲ ?
(4) ನನ್ನ ಮನೆಯಲ್ಲಿ ಬಹಳ ಪುಸ್ತಕಗಳು ಇವೆ.
(5) ಬುದ್ಧನು ಗಯೆಯಲ್ಲಿ ಜ್ಞಾನವನ್ನು ಪಡೆದನು.

## ಪಾಠ V

ಕನ್ನಡಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) प्रातः अहं शालां अगच्छम् ।
(2) बालकेभ्यो जननी सहर्षं मोदकान् प्रायच्छत् ।
(3) वैरिषु को वा न क्रुध्यति ?
(4) विद्याविहीनाः कथं जीवेयुः ?
(5) निःस्पृहस्य तृणं जगत् ।

ಸಂಸ್ಕೃತಕೆ ಪರಿವರ್ತಿಸಿರಿ :—

(1) ಇಂದು ಅವನು ಊರಿಗೆ ಹೋದನು.
(2) ಅವರು ಎಂದು ಬರುತ್ತಾರೆ ?
(3) ನಿನ್ನೆ ಭಾನುವಾರವಿತ್ತು.
(4) ಕಾಳಿದಾಸನ ಕಾವ್ಯವನ್ನು ಓದಿ ಜನರು ಆನಂದವನ್ನು ಪಡೆಯುತ್ತಾರೆ.
(5) ದೇಶದಂತೆ ಭಾಷೆ ಇರುತ್ತದೆ.

## ಪಾಠ VI

ಕನ್ನಡಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) अल्पविद्यः महागर्वी ।
(2) शठं प्रति शाठ्यम् ।
(3) दण्डं दशगुणं भवेत् ।
(4) चिन्तासमं नास्ति शरीरशोषणम् ।
(5) उद्यमेन हि सिध्यन्ति कार्याणि ।

ಸಂಸ್ಕೃತಕ್ಕೆ ಪರಿವರ್ತಿಸಿರಿ :—

(1) ಗಾಯದ ಮೇಲೆ ಉಪ್ಪು ಹಾಕಿದಂತೆ.
(2) ಒಂದು ತಪ್ಪಿಗೆ ನೂರು ತಪ್ಪುಗಳು ಆಗುತ್ತವೆ.
(3) ಪರೋಪಕಾರದಿಂದ ಪುಣ್ಯ ಒದಗುತ್ತದೆ.
(4) ಕೇಳದೇ ಹೇಳಕೂಡದು.
(5) ಮಾತಿಗೆ ಬಡತನವೇನು ?

## ಪಾಠ VII

ಕನ್ನಡಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) यदा रामः वनं गतः तदा सीतापि अन्वगच्छत् ।
(2) यादृशी भावना यस्य सिद्धिर्भवति तादृशी ।
(3) यावद्विभीषणः उपदिशति तावत् रावणः तं प्रति क्रुध्यति ।
(4) उत्सवे जनाः इतस्ततः भ्रमन्ति ।
(5) तेन विना तृणमपि न चलति ।

ಸಂಸ್ಕೃತಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) ಯುದ್ಧಕಾಲದಲ್ಲಿ ಜನರೆಲ್ಲ ಒಟ್ಟುಗೂಡುತ್ತಾರೆ.
(2) ತಾನು ಮಾಡಿದ್ದನ್ನು ತಾನು ಅನುಭವಿಸಲೇಬೇಕು.
(3) ಗೋವಿಂದನು ಇಂದು ಮಂದರಾಸಿನಿಂದ ಬಂದನು.
(4) ರೈಲ್ವೆ ಪ್ರಯಾಣ ಇದೀಗ ಸುಖಕರವಾಗಿದೆ.
(5) ಮಳೆ ಬಂದಾಗ ರೈತರು ಆನಂದ ಹೊಂದುತ್ತಾರೆ.

## ಪಾಠ VIII

ಕನ್ನಡಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) सर्वे जनाः सुखिनो भवन्तु ।
(2) पथि स्थितं तिष्ठति दैवरक्षितम् ।
(3) जननी जन्मभूमिश्च स्वर्गादपि गरीयसी ।
(4) गुणाः पूजास्थानम् ।
(5) न हि ज्ञानेन सदृशं पवित्रम् ।

ಸಂಸ್ಕೃತಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

(1) ದೊಡ್ಡ ನಗರಗಳಲ್ಲಿ ವಾಹನಗಳು ಬಹಳ ಇರುತ್ತವೆ.
(2) ಇನ್ನೊಬ್ಬರ ವಸ್ತುವಿಗೆ ಆಸೆ ಪಡಬಾರದು.
(3) ಸದ್ಗುಣಗಳನ್ನು ಪಡೆಯಲು ಎಲ್ಲರೂ ಪ್ರಯತ್ನಿಸಬೇಕು.
(4) ಜಾಣನಾದವನು ತಿಳಿದವರ ಮಾತುಗಳನ್ನು ಕೇಳಬೇಕು.
(5) ಕಷ್ಟವನ್ನು ಪಡದೆಯೆ ಸುಖ ಸಿಕ್ಕುವದಿಲ್ಲ.

## ಪಾಠ IX

ಕನ್ನಡಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

एषः सारमेयः । जनाः गृहे पालयन्ति सारमेयम् । रक्षति च असौ तेषां गृहम् । अपूपं मांसं च सारमेयः भक्षयति । रात्रौ पालकस्य गृहद्वारे तिष्ठति भषति च । अस्य भषणेन तत्र चोराः नागच्छन्ति । दिवा असौ कंचित् कालं स्वपिति ।

ಸಂಸ್ಕೃತಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

ಪ್ರಾಚೀನ ಕಾಲದಲ್ಲಿ ಚಣಕ ಎಂಬ ಹೆಸರಿನ ವಿಪ್ರನಿದನು. ಅವನಿಗೆ ವಿಷ್ಣುಗುಪ್ತನೆಂಬ ಮಗನು ಇದ್ದನು. ಅವನು ಎಲ್ಲ ಶಾಸ್ತ್ರಗಳಲ್ಲಿ ಪಂಡಿತನಾಗಿ ಚಾಣಕ್ಯ ಎಂದು ಹೆಸರು ಪಡೆದನು. ಒಮ್ಮೆ ಆತನು ದಾರಿಯಲ್ಲಿ ಹೋಗುತ್ತಿದ್ದನು. ಒಂದು ಗರಿಕೆ ಹುಲ್ಲು ಅವನ ಕಾಲಿಗೆ ಸುತ್ತಿಕೊಂಡಿತು. ಅವನು ಅದನ್ನು ಬೇರು ಸಹಿತ ಕಿತ್ತುಹಾಕಿದನು.

ಕನ್ನಡಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

महाराजो हरिश्चन्द्रः स्वस्य सत्यवादितायै अत्यन्तं प्रसिद्धः। सः स्वकीयं समग्रं राज्यं विश्वामित्राय दत्वा प्रतिज्ञां पूरयामास। एकदा सः शयानः आसीत्। सः स्वप्ने स्वकीयं राज्यं विप्राय ददाति। अपरस्मिन् दिने वस्तुत एव विश्वामित्रः ऋषिः तस्य राज्ञः समीपे आगच्छत्। राजानं च राज्यस्य दानाय अकथयत्।

ಸಂಸ್ಕೃತಕ್ಕೆ ಭಾಷಾಂತರಿಸಿರಿ :—

ಕಲ್ಯಾಣ ನಗರದಲ್ಲಿ ಕಲಚೂರ್ಯ ವಂಶದ ರಾಜನು ರಾಜ್ಯವಾಳುತ್ತಿದ್ದನು. ಅವನ ಹೆಸರು ಬಿಜ್ಜಳ. ಬಸವೇಶರ ಎಂಬ ದಂಡಾಧಿಕಾರಿ ಅವನ ಬಳಿ ಇದ್ದನು. ಅವನು ಆತ್ಮೋಪಾಸನೆಯಲ್ಲಿ ಮಗ್ನನಾಗಿದ್ದನು. ಅತ್ಯಂತ ನ್ಯಾಯವಾದ ರೀತಿಯಲ್ಲಿ ರಾಜಕಾರ್ಯವನ್ನು ನಡೆಸುತ್ತಿದ್ದನು. ಅವನ ಕಾಲದಲ್ಲಿ ಧರ್ಮ ನೀತಿಗಳು ಬಹುವಾಗಿ ಅಭಿವೃದ್ಧಿ ಹೊಂದಿದವು.

* * * *

# ಭಾವಾನುವಾದ

ಸುಭಾಷಿತಗಳು ನೀತಿ ವಿಚಾರಗಳನ್ನು ಹೇಳುವ ಮಾತುಗಳು. ಎಲ್ಲ ಕಡೆಯಲ್ಲಿ ಅವು ಗಾದೆಯ ಮಾತುಗಳಂತೆ ಸೇರಿಹೋಗಿವೆ. ವೇದಪುರಾಣ ಕಾವ್ಯಾದಿಗಳಲ್ಲಿ ಸೇರಿಕೊಂಡಿವೆ. ಬರೆದವರ ಹೆಸರೂ ತಿಳಿಯದೆ ಅನೇಕ ಪ್ರಚಲಿತವಾಗಿವೆ. ಈ ಸುಭಾಷಿತಗಳ ಅಭ್ಯಾಸದಿಂದ ಬುದ್ಧಿಯ ವಿಕಾಸದೊಂದಿಗೆ ವ್ಯವಹಾರ ಜ್ಞಾನವೂ ಉಂಟಾಗುತ್ತದೆ.

ಸುಭಾಷಿತಗಳನ್ನು ಅರ್ಥವತ್ತಾಗಿ ತಿಳಿಯುವದು ಅವಶ್ಯ. ಅವುಗಳ ಅರ್ಥವನ್ನು ವಿವರವಾಗಿ ಬಿಡಿಸಿ ತಿಳಿಯಬೇಕಾಗುತ್ತದೆ. ಅದಕ್ಕಾಗಿ ಇಲ್ಲಿ ಅಲ್ಪ ದಿಗ್ದರ್ಶನ ಮಾಡಿದೆ.

काचः काञ्चनसंसर्गात् धत्ते मारकतीं द्युतिम्।
एवं सज्जनसंसर्गात् मूढोऽप्यायाति पात्रताम्॥

ಕೆಳಗಿನ ಹಂತಗಳಲ್ಲಿ ಇದರ ಅರ್ಥವನ್ನು ತಿಳಿಯಬಹುದು—

(1) ಶ್ಲೋಕದ ಅರ್ಥವನ್ನು ತಿಳಿಯಲು ಅನ್ವಯಾನುಸಾರ ಪದಗಳನ್ನು ಹೊಂದಿಸಿಕೊಳ್ಳುವುದು. ಮೊದಲು ಕ್ರಿಯಾಪದವನ್ನು ಗುರ್ತಿಸಿ ನಂತರ ಅದಕ್ಕೆ ಸಂಬಂಧಿಸಿದ ಕರ್ತೃ, ಕರ್ಮ, ವಿಶೇಷಣಾದಿಗಳನ್ನು ತಿಳಿದುಕೊಳ್ಳಬಹುದು.

काचः काञ्चनसंसर्गात् मारकतीं द्युति धत्ते ।

एवं मूढः अपि सज्जनसंसर्गात् पात्रतां आयाति ।।

(2) ಗಾಜಿನಮಣಿಯೂ ಬಂಗಾರದ ಒಳಿ ಸೇರುವದರಿಂದ ಮರಕತರತ್ನದ ಕಾಂತಿಯನ್ನು ಹೊಂದುತ್ತದೆ. ಹಾಗೆಯೇ ಮೂರ್ಖನೂ ಕೂಡ ಸಜ್ಜನರ ಸಂಗತಿಯಿಂದ ಸ್ಥಾನಮಾನವನ್ನು ಪಡೆಯುತ್ತಾನೆ.

(3) ಇಲ್ಲಿ ಹೋಲಿಕೆ ಇದೆ.

ಗಾಜಿನಮಣಿ—ಬಂಗಾರದ ಸಂಪರ್ಕ——ಕಾಂತಿ

ಮೂರ್ಖ—ಸಜ್ಜನ ಸಂಗತಿ—ಗೌರವ

ಒಟ್ಟು ಒಳ್ಳೆಯ ಸಂಗದಿಂದ ಶ್ರೇಷ್ಠ ಪದವಿ.

(4) ನೀತಿ ಒಳ್ಳೆಯ ಸಂಗ ಉತ್ಕರ್ಷದ ಅಂಗ.

(5) ಇದರ ಜತೆ ಇತರ ಭಾಷೆಯಲ್ಲಿಯೂ ಅದೇ ತರಹದ ನಾಣ್ಣುಡಿಗಳನ್ನು ಉದಾಹರಿಸಬಹುದು. ಉದಾಹರಣೆ:—ಸಜ್ಜನರ ಸಂಗವದು ಹೆಜ್ಜೇನು ಸವಿದಂತೆ.

ಹೀಗೆ ಇಷ್ಟು ವಿಚಾರ ತಿಳಿದು ಕೆಳಗಿನ ಅಂಶಗಳಿಂದ ಭಾವಾನುವಾದ ಮಾಡಬಹುದು.

1. ಅನುವಾದ
2. ಅರ್ಥ
3. ವಿಶೇಷ ಅರ್ಥ
4. ನೀತಿ.

ಕೊಟ್ಟ ಸಹಾಯಕ ಟಿಪ್ಪಣಿಗಳ ಮೂಲಕ ಕೆಳಗಿನ ಶ್ಲೋಕಗಳನ್ನು ವಿವರಿಸಿರಿ.

3 4 1 2
(1) विद्वानेव विजानाति विद्वज्जनपरिश्रमम् ।

4 5 3 6 2 1
न ह्यमाता विजानाति पुत्रसौख्यं निरन्तरम् ॥

परिश्रमः = ಕಷ್ಟ. अमाता = ತಾಯಲ್ಲದವಳು.

ಅನುಭವದಿಂದಲೇ ಜ್ಞಾನ.

(2) काक आह्वयते काकान् याचको न तु याचकान् ।
काकयाचकयोर्मध्ये वरं काको न याचकः ॥

ಮೊದಲನೆಯ ಪಾದದಲ್ಲಿ आह्वयते ಇದು काकः ಎಂಬ ಪದಕ್ಕೂ याचकः न ಎಂಬ ಪದಗಳಿಗೂ ಒಟ್ಟಾಗಿ ಅನ್ವಯವಾಗುತ್ತದೆ.

ಜತೆಯವರೊಡನೆ ಕೂಡಿ ಬಾಳುವದು ಸದ್ಗುಣ.

(3) दानं भोगो नाशः तिस्रो गतयो हि वित्तस्य ।
यो न ददाति न भुंक्ते तस्य तृतीया गतिर्भवति ॥

तृतीया गतिः = ನಾಶ. वित्तं = ಸಂಪತ್ತು.

ನೋಡಿ :—ಉಳ್ಳಲ್ಲಿ ಉಣಲಿಲ್ಲ ಉಳ್ಳಲ್ಲಿ ಉಡಲಿಲ್ಲ
ಉಳ್ಳಲ್ಲಿ ದಾನ ಕೊಡದವನ ಒಡವೆ ತಾ
ಕಳ್ಳಗೆ ನೃಪಗೆ ಸರ್ವಜ್ಞ.

ಕೆಳಗಿನ ಶ್ಲೋಕಗಳ ಅರ್ಥ ಹಾಗೂ ನೀತಿಯನ್ನು ವಿವರಿಸಿರಿ :—

(1) रूपयौवनसंपन्नाः विशालकुलसंभवाः ।
विद्याहीनाः न शोभन्ते निर्गन्धा इव किंशुकाः ॥

(2) स्वगृहे पूज्यते मूर्खः स्वग्रामे पूज्यते प्रभुः ।
स्वदेशे पूज्यते राजा विद्वान्सर्वत्र पूज्यते ॥

(3) दुर्जनः परिहर्तव्यः विद्ययालङ्कृतोऽपि सन् ।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥

(4) अनभ्यासे विषं विद्या अजीर्णे भोजनं विषम् ।
दरिद्रस्य विषं गोष्ठी विषं च सहसा कृतम् ॥

(5) शतेषु जायते शूरः सहस्रेषु च पण्डितः ।
वक्ता शतसहस्रेषु दाता भवति वा न वा ॥

(6) पक्षिणां बलमाकाशं मत्स्यानामुदकं बलम् ।
दुर्बलानां बलं राजा बालानां रोदनं बलम् ॥

(7) घृतेन वर्धते बुद्धिः क्षीरेणायुः प्रवर्धते ।
कुशाकाद्वर्धते व्याधिः मांसं मांसेन वर्धते ॥

(8) त्यज दुर्जनसंसर्गं भज साधुसमागमम् ।
कुरु पुण्यमहोरात्रं स्मर सर्वेश्वरं सदा ॥

(9) पुस्तकस्था तु या विद्या परहस्तगतं धनम् ।
कार्यकाले समुत्पन्ने न सा विद्या न तद्धनम् ॥

(10) यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् ।
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥

(11) उदये सविता रक्तः रक्तश्चास्तमने तथा ।
संपत्तौ च विपत्तौ च महतामेकरूपता ॥

(12) अजरामरवत् प्राज्ञः विद्यामर्थं च साधयेत् ।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥

* * * *

# ಸಂಕ್ಷೇಪ ಬರಹ

ಬರಹಗಳು ಕೇವಲ ವಿಷಯವನ್ನು ಮಾತ್ರ ತಿಳಿಸುತ್ತಿರಬಹುದು ಇಲ್ಲವೆ ಅಲಂಕಾರಾದಿಗಳಿಂದ ವರ್ಣಿಸಿ ಬೆಳೆಸಿ ಹೇಳುತ್ತಿರಬಹುದು. ಆದರೆ ವಿಷಯವನ್ನು ಮಾತ್ರ ಮುಖ್ಯವಾಗಿ ತಿಳಿಯಬೇಕಾದ ಸಂದರ್ಭದಲ್ಲಿ ವರ್ಣನಾದಿಗಳನ್ನು ಬಿಟ್ಟು ಕೇವಲ ವಿಷಯದ ಸಂಗ್ರಹವನ್ನು ಮಾಡಬೇಕಾಗುತ್ತದೆ. ಲೇಖನಗಳು, ವರ್ಣನೆಗಳು, ಕಥಾಭಾಗಗಳು ಇವುಗಳಲ್ಲಿ ಹೇಗೆ ಇತ್ತು, ಹೇಗೆ ನಡೆಯಿತು ಎಂಬುದನ್ನು ಬಿಟ್ಟು ಏನು ನಡೆಯಿತು ಎಂಬುದನ್ನು ಮಾತ್ರ ಸಂಕ್ಷೇಪಿಸಿ ಆಯ್ದು ತೆಗೆಯಬೇಕಾಗುತ್ತದೆ. ಇದಕ್ಕೆ ಸಂಕ್ಷೇಪೀಕರಣ ಎಂದು ಹೆಸರು.

ಲಕ್ಷ್ಯವಿಡಿ :

(1) ಮೂಲ ವಿಷಯ ಮಾತ್ರ ಯಾವುದೂ ಬಿಡದಂತೆ ಸಂಗ್ರಹವಾಗಿರಬೇಕು.

(2) ವರ್ಣನೆ, ಅಲಂಕಾರಾದಿಗಳನ್ನು ಬಿಟ್ಟುಬಿಡಬಹುದು.

(3) ಸಂಕ್ಷೇಪವು ಮೂಲ ಲೇಖದ ಸುಮಾರು ಮೂರನೆಯ ಒಂದು ಭಾಗದಷ್ಟು ಇರಬೇಕು.

ಉದಾಹರಣೆ :

ದಿಕ್ಕು ದಿಕ್ಕುಗಳನ್ನೆಲ್ಲ ಮಿಂಚಿನಂತೆ ಅಲೆದು ಮಹಾಧೀರ ವಿವೇಕಾನಂದರು ಸಂಪದ್ಭರಿತವಾದ ಚಿಕ್ಯಾಗೋ ನಗರಕ್ಕೆ ಬಂದರು. ಅಲ್ಲಿಯೇ ಸರ್ವಧರ್ಮ ಸಮ್ಮೇಳನವಿತ್ತು. ಅಲ್ಲಿ ಪ್ರಪ್ರಥಮವಾಗಿ 'ನನ್ನ ಅಣ್ಣತಮ್ಮಂದಿರೇ' ಎಂದು ಸಂಬೋಧಿಸಿದರು. ಪ್ರೇಕ್ಷಕರು ಮೂಕಮುಗ್ಧರಾದರು.

ಇಲ್ಲಿ ಮುಖ್ಯವಿಷಯ :

ವಿವೇಕಾನಂದರು — ಬಹುಪ್ರವಾಸ — ಚಿಕ್ಯಾಗೋ ನಗರ — ಸರ್ವಧರ್ಮ ಸಮ್ಮೇಳನ—ಅಣ್ಣತಮ್ಮಂದಿರೇ ಎಂದು ಸಂಬೋಧನ—ಜನ ಚಕಿತರು.

ಇದನ್ನೇ

ದೀರ್ಘಪ್ರವಾಸದಲ್ಲಿ ವಿವೇಕಾನಂದರು ಚಿಕ್ಯಾಗೋ ನಗರದ ಸರ್ವಧರ್ಮ ಸಮ್ಮೇಳನದಲ್ಲಿ ನನ್ನ ಅಣ್ಣತಮ್ಮಂದಿರೇ ಎಂದು ಸಂಬೋಧಿಸಿ ಪ್ರೇಕ್ಷಕರನ್ನು ಚಕಿತಗೊಳಿಸಿದರು ಎಂದು ಹೇಳಬಹುದು.

ಸಂಸ್ಕೃತದಲ್ಲಿ :

दुष्यन्तः मारीचस्य दिव्यं आश्रमं प्राविशत् । तस्मिन् सुन्दरे आश्रमे भरतः शकुन्तेन सह सहर्षं क्रीडति । सः अतीव सुन्दरः । तं दृष्ट्वा राजा मुग्धः । तस्मिन् स्निह्यति च ।

ಸಂಕ್ಷೇಪ :

दुष्यन्तः मारीचस्य आश्रमे क्रीडन्तं भरतं दृष्ट्वा आनन्देन तस्मिन् स्निह्यति ।

ಸಂಕ್ಷೇಪಿಸಿ :—

(1) जनकः महान् राजा । एकदा सः ऋषिभिः सह अध्ययने रतः । तदा अनेन श्रुतम् । तव पुरी दग्धा इति । किन्तु सः न व्यचलत् । अवदत् च । मम किंचिन्न दहति इति ।

(2) अर्जुनः युद्धभूमौ आगतः । कृष्णः तस्य सारथिः । तत्र अर्जुनस्य पुरतः आचार्याः पितरः पौत्राः च स्थिताः । तान् दृष्ट्वा सः अतीव खिन्नः । कथमहं मम संबन्धिनः हनिष्ये इति चिन्ताकुलः अभवत् । भ्रमतीव तन्मनः । तदा श्रीकृष्णः ‘ क्लैब्यं मा स्म गमः ’ इति तमुपादिशत् ।

(3) कश्चित् शिष्यः गुरोः सन्निधाने गत्वा अवदत् । कथमहं ईश्वरे अदृष्टे विश्वसिमि इति । तदा गुरुः तमाह । औदुंबरफलमेकमानय । शिष्यः गत्वा तदाहरत् । गुरुरवदत् तं भिन्धि इति । शिष्येण तद्भिन्नम् । तदन्तः सूक्ष्माः धानाः दृष्टाः । एकां पुनः भिन्धि इति गुरुरवदत् । तद्भिन्नम् । किं पश्यसि अन्तः ? गुरुरपृच्छत् । शिष्योऽवदत् न किमपि इति । तदा गुरुः उपदिशति । यत्त्वं न पश्यसि किमपि अन्तः तेनैव एषः महान् औदुंबरः जातः । विश्वस सौम्य विश्वस इति ।

### ಕಠಿಣಪದಗಳ ಅರ್ಥ

| | |
|---|---|
| दग्धा = ಸುಟ್ಟಿತು | औदुंबरफलं = ಅತ್ತಿಹಣ್ಣು |
| क्लैब्यं = ಹೇಡಿತನ | भिन्धि — ಛೇದಿಸು |
| हनिष्ये = ಕೊಲ್ಲಲಿ ? | धानाः = ಬೀಜಗಳು |

ಪಠ್ಯಭಾಗದಲ್ಲಿಯ ಕೆಲವು ಪರಿಚ್ಛೇದಗಳನ್ನು ಹೀಗೆಯೇ ಸಂಕ್ಷೇಪಿಸಿ.

* * * *

# ಪ್ರಯೋಗಗಳು

ಕ್ರಿಯೆಯನ್ನು ಸೂಚಿಸುವ ಪದವೇ ಕ್ರಿಯಾಪದ. ಸಾಮಾನ್ಯವಾಗಿ ಕ್ರಿಯಾಪದವಿಲ್ಲದೆ ವಾಕ್ಯವಾಗುವದಿಲ್ಲ. ಕ್ರಿಯಾಪದಗಳಲ್ಲಿ ಎರಡು ಬಗೆಗಳು ಇವೆ. ಒಂದು ಸಕರ್ಮಕ ಕ್ರಿಯಾಪದ, ಇನ್ನೊಂದು ಅಕರ್ಮಕ ಕ್ರಿಯಾಪದ. ಅಕರ್ಮಕ ಕ್ರಿಯಾಪದದ ಕ್ರಿಯೆ ಕರ್ತೃ ಮಾತ್ರವಿದ್ದರೆ ನಡೆಯುತ್ತದೆ. ಆದರೆ ಸಕರ್ಮಕ ಕ್ರಿಯಾಪದದಲ್ಲಿ ಕರ್ತೃವಿಗೆ ಆ ಕ್ರಿಯೆಯನ್ನು ಮಾಡಲು ಒಂದು ಬೇರೆ ಸಾಧನವು ಬೇಕಾಗುತ್ತದೆ. ಇದೇ ಕರ್ಮ.

ಅವನು ಓಡುತ್ತಾನೆ—ಅವನಿದ್ದರೆ ಸಾಕು, ಓಡುವ ಕ್ರಿಯೆ ನಡೆಯುತ್ತದೆ.
ಗೋಪಾಲನು ಆಕಳನ್ನು ಹಿಂಡುತ್ತಾನೆ—ಗೋಪಾಲನಿಗೆ ಹಿಂಡಿಕೊಳ್ಳುವ ಕ್ರಿಯೆಗೆ ಆಕಳು ಬೇಕು.

ಪ್ರಯೋಗಗಳು ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ಮೂರು ಇವೆ :

(1) ಕರ್ತರಿ ಪ್ರಯೋಗ, (2) ಕರ್ಮಣಿ ಪ್ರಯೋಗ,
(3) ಭಾವೇ ಪ್ರಯೋಗ

(1) ಕರ್ತೃಪ್ರಧಾನವಾಗಿರುವ ಪ್ರಯೋಗವು ಕರ್ತರಿ ಪ್ರಯೋಗ
स गच्छति । सतीशः धावति ।

(2) ಕರ್ಮವೇ ಪ್ರಧಾನವಾಗಿರುವ ಪ್ರಯೋಗವು ಕರ್ಮಣಿ ಪ್ರಯೋಗ.
तया पुस्तकं पठ्यते । शान्तलया दानं दीयते ।

(3) ಭಾವ ಎಂದರೆ ಕ್ರಿಯೆಯೇ ಪ್ರಧಾನವಾಗಿರುವ ಪ್ರಯೋಗವು ಭಾವೇ ಪ್ರಯೋಗ.
मया धाव्यते—(मया धावनं क्रियते)
तेन गम्यते—(तेन गमनं क्रियते)

ವಿಶೇಷಗಳು :

(1) ಕರ್ತರಿ ಪ್ರಯೋಗದಲ್ಲಿ ಕರ್ತೃಪದವು ಪ್ರಥಮಾ ವಿಭಕ್ತಿಯಲ್ಲಿಯೂ, ಕರ್ಮಪದವು ದ್ವಿತೀಯಾವಿಭಕ್ತಿಯಲ್ಲಿಯೂ ಇರುತ್ತದೆ. ಕ್ರಿಯಾ ಪದವು ಕರ್ತೃಪದದ ಪುರುಷ, ವಚನಗಳನ್ನು ಅನುಸರಿಸುತ್ತದೆ.

(2) ಕರ್ಮಣಿ ಪ್ರಯೋಗದಲ್ಲಿ ಕರ್ಮಪದವು ಪ್ರಥಮಾ ವಿಭಕ್ತಿಯಲ್ಲಿಯೂ, ಕರ್ತೃಪದವು ತೃತೀಯಾವಿಭಕ್ತಿಯಲ್ಲಿಯೂ ಇರುತ್ತದೆ. ಕ್ರಿಯಾ ಪದವು ಕರ್ಮಪದದ ಪುರುಷ, ವಚನಗಳನ್ನು ಅನುಸರಿಸುತ್ತದೆ.

(3) ಭಾವೇಪ್ರಯೋಗದಲ್ಲಿ ಕರ್ತೃಪದವು ತೃತೀಯಾವಿಭಕ್ತಿಯಲ್ಲಿ ಇರುತ್ತದೆ. ಕರ್ಮಪದವಿರುವದಿಲ್ಲ. ಕ್ರಿಯಾಪದವು ಯಾವಾಗಲೂ ತೃತೀಯಪುರುಷ ಏಕವಚನದಲ್ಲಿ ಇರುತ್ತದೆ.

ಇತರ ಭಾಷೆಗಳಲ್ಲಿ ಸಾಮಾನ್ಯವಾಗಿ ಭಾವೇ ಪ್ರಯೋಗದ ಬಳಕೆ ಇಲ್ಲ.

I. ಕರ್ಮಣಿಪ್ರಯೋಗಕ್ಕೆ ಬದಲಾಯಿಸಿರಿ :

(1) महादेवी वचनं गायति ।
(2) सतीशः चन्द्रं धारयति ।
(3) बाला विपणिं गच्छन्ति ।
(4) अध्यापकः काव्यं अनुवदति ।
(5) छात्रः कवितां पठति ।

II. ಕರ್ತರಿಪ್ರಯೋಗಕ್ಕೆ ಬದಲಾಯಿಸಿರಿ :

(1) बालेन दुग्धं पीयते ।
(2) कृषीवलेन क्षेत्रं कृष्यते ।
(3) अध्यापकेन अध्यापनं क्रियते ।
(4) सिंहैः वने स्थीयते ।
(5) नायकैः राष्ट्रम् शास्यते ।

III. ಸರಿಯಾದ ಪದ ತುಂಬಿ ಭಾವೇಪ್ರಯೋಗ ಮಾಡಿರಿ :

(1) क्रीडाङ्गणे बालैः (क्रीड्)
(2) खगैः आकाशे (डी)
(3) (सज्जन) सन्मार्गे (चल्)
(4) (मातृ) मधुरं (गै)
(5) मन्दं (वायु) प्रचल्यते ।

V. ಪಠ್ಯಭಾಗದಲ್ಲಿಯ ಕರ್ಮಣಿಪ್ರಯೋಗಗಳನ್ನೂ, ಕರ್ತರಿಪ್ರಯೋಗಗಳನ್ನೂ ಪರಸ್ಪರ ಬದಲಾಯಿಸಿರಿ.

VI. ಪಠ್ಯಭಾಗದಲ್ಲಿಯ ಭಾವೇಪ್ರಯೋಗಗಳನ್ನು ಗುರುತಿಸಿ.

* * * *

## ವಚನಗಳು

ಸಾಮಾನ್ಯವಾಗಿ ಇತರ ಭಾಷೆಗಳಲ್ಲಿ ಏಕವಚನ, ಬಹುವಚನಗಳೆಂದು ಎರಡೇ ವಚನಗಳಿವೆ. ಆದರೆ ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ವಚನಗಳು ಮೂರು : (1) ಏಕವಚನ, (2) ದ್ವಿವಚನ, (3) ಬಹುವಚನ. ನಿಸರ್ಗದಲ್ಲಿ ಎರಡೆರಡೇ ಜತೆಯಾಗಿರುವ ಅನೇಕ ವಸ್ತುಗಳು ಇವೆ. ಉದಾ. : ಕಣ್ಣು, ಕಿವಿ, ಕೈಗಳು. ಈ ಜತೆಯನ್ನು ಖಚಿತವಾಗಿ ಹೇಳಲು ಸಂಸ್ಕೃತಭಾಷೆಯಲ್ಲಿ ದ್ವಿವಚನವು ಇದೆ. ಇದು ಸಂಸ್ಕೃತಭಾಷೆಯ ವೈಶಿಷ್ಟ್ಯ. ಪ್ರತಿಯೊಂದು ಪದಕ್ಕೂ ಮೂರು ವಚನಗಳ ರೂಪಗಳು ಸಾಮಾನ್ಯವಾಗಿವೆ.

| ಏ.ವ. | ದ್ವಿವ. | ಬ.ವ. |
|---|---|---|
| सतीशः | सतीशौ | सतीशाः |
| विमला | विमले | विमलाः |
| कन्दुकम् | कन्दुके | कन्दुकानि |

ಕ್ರಿಯಾಪದಗಳು ಸಾಮಾನ್ಯವಾಗಿ ಕರ್ತೃವಿನ ವಚನವನ್ನೇ ಅನುಸರಿಸುತ್ತವೆ.

### ಅಭ್ಯಾಸ

I. ಸಂಸ್ಕೃತ ಭಾಷೆಯಲ್ಲಿ ವಿಶಿಷ್ಟ ವಚನ ಯಾವುದು ? ವಿವರಿಸಿರಿ.

II. ಸರಿಯಾದ ವಚನ ಉಪಯೋಗಿಸಿರಿ :—

(1) मम (नयन) स्तः ।
(2) तव द्वौ (पुत्र) ।
(3) नरस्य एकं एव (मुख) ।
(4) (जन) ग्रामं गच्छन्ति ।
(5) आवां (चल) ।

**III.** ಕೆಳಗಿನವುಗಳನ್ನು ಏಕವಚನ ದ್ವಿವಚನ ಬಹುವಚನಗಳಲ್ಲಿ ಪಟ್ಟಿಮಾಡಿರಿ :

(1) फलं त्रीणि वस्त्रं यानानि शिक्षा अहं तेषु सा मम बालयोः दिनाभ्यां ।

**IV.** ಪಠ್ಯಭಾಗದಲ್ಲಿ ಬಂದಿರುವ ದ್ವಿವಚನಗಳನ್ನು ಪಟ್ಟಿಮಾಡಿರಿ.

ವಚನಗಳನ್ನು ಒಂದರಿಂದ ಇನ್ನೊಂದಕ್ಕೆ ಬದಲಾಯಿಸಬಹುದು. ಏಕವಚನಗಳನ್ನು ಬಹುವಚನಕ್ಕೆ ಅಥವಾ ದ್ವಿವಚನಕ್ಕೆ, ದ್ವಿವಚನವನ್ನು ಏಕವಚನ ಅಥವಾ ಬಹುವಚನಕ್ಕೆ, ಹಾಗೆಯೇ ಬಹುವಚನವನ್ನು ಏಕವಚನ ಅಥವಾ ದ್ವಿವಚನಕ್ಕೆ ಬದಲಾಯಿಸಬಹುದು.

ಉದಾ. : (1) सः तत्र गच्छति ಏ.ವ.
तौ तत्र गच्छतः ದ್ವಿವ.
ते तत्र गच्छन्ति ಬ.ವ.

(2) याने तत्र आयातः ದ್ವಿವ.
यानं तत्र आयाति ಏ.ವ.
यानानि तत्र आयान्ति ಬ.ವ.

(3) बालिकाः शालां गच्छन्ति ಬ.ವ.
बालिका शालां गच्छति ಏ.ವ.
बालिके शालां गच्छतः ದ್ವಿವ.

ವಚನ ಬದಲಿಸಿರಿ :—

(1) अहं गृहे वसामि ।
(2) तौ भ्रातरौ वदतः ।
(3) सा जलं वहति ।
(4) खगौ डयतः ।
(5) भामिनी गायति ।

ಪಠ್ಯಭಾಗದಲ್ಲಿ ಬರುವ ಪದಗಳ ವಚನ ಬದಲಿಸಿರಿ.

* * * *

# ಕ್ರಮವಾಚಕಗಳು

ನೀವು ಸಂಖ್ಯಾವಾಚಕಗಳನ್ನು ತಿಳಿದಿದ್ದೀರಿ. ಇವು ಇರುವ ವಸ್ತುಗಳ ಒಟ್ಟು ಸಂಖ್ಯೆಯನ್ನು ಮಾತ್ರ ತಿಳಿಸುತ್ತವೆ. द्वौ पुत्रौ ಇಬ್ಬರು ಮಕ್ಕಳು. त्रीणि ಮೂರು ಇತ್ಯಾದಿ.

ಆದರೆ ಇರುವ ವಸ್ತುಗಳಲ್ಲಿ ಯಾವದೇ ಒಂದು ವಸ್ತುವು ಎಷ್ಟನೆಯ ಸ್ಥಾನದಲ್ಲಿ ಅಥವಾ ಕ್ರಮಾಂಕದಲ್ಲಿ ಇದೆ ಎಂಬುದನ್ನು ಖಚಿತವಾಗಿ ಸೂಚಿಸಲು ಕ್ರಮವಾಚಕಗಳನ್ನು ಉಪಯೋಗಿಸಬೇಕು.

एक ಒಂದು     प्रथम ಮೊದಲನೆಯದು.

द्वौ ಎರಡು     द्वितीय ಎರಡನೆಯದು

ಸಂಖ್ಯಾವಾಚಕದಿಂದ ಒಟ್ಟು ಸಂಖ್ಯೆ ತಿಳಿದರೆ ಕ್ರಮವಾಚಕದಿಂದ ವಸ್ತುವಿನ ಕ್ರಮಾಂಕವು ತಿಳಿಯುತ್ತದೆ.

ಕ್ರಮಾಂಕಗಳು ಕೆಳಗಿನಂತೆ ಇವೆ :–

(१) प्रथम
(२) द्वितीय
(३) तृतीय
(४) चतुर्थ
(५) पञ्चम
(६) षष्ठ
(७) सप्तम
(८) अष्टम
(९) नवम
(१०) दशम
(११) एकादश
(१२) द्वादश
(१३) त्रयोदश
(१४) चतुर्दश
(१५) पञ्चदश
(१६) षड्दश
(१७) सप्तदश
(१८) अष्टादश
(१९) नवदश
(२०) विंश
(२१) एकविंशतितम
(२२) द्वाविंशतितम

ಹೀಗೆ ಮುಂದೆ ಸಂಖ್ಯಾವಾಚಕಗಳಿಗೆ तम ಪ್ರತ್ಯಯಃ ಸೇರಿ ಕ್ರಮವಾಚಕಗಳಾಗುತ್ತವೆ.

ಒಂದರಿಂದ ನೂರರವರೆಗೆ ಕ್ರಮವಾಚಕಗಳನ್ನು ಕೊನೆಯಲ್ಲಿ ಕೊಟ್ಟಿದೆ.

ಲಕ್ಷ್ಯವಿಡಿ :—

(1) ಇವೆಲ್ಲವೂ ಅಕಾರಾಂತವಾಗಿವೆ.
(2) ಇವೆಲ್ಲವೂ ಸಂಖ್ಯಾವಾಚಕಗಳಂತೆ ವಿಶೇಷಣಗಳು.
(3) ವಿಶೇಷ್ಯದ ಲಿಂಗವಚನವಿಭಕ್ತಿಗಳನ್ನು ಇವು ಅನುಸರಿಸುತ್ತವೆ.
(4) प्रथम, द्वितीय, तृतीय ಇವುಗಳು ಪುಲ್ಲಿಂಗ ಹಾಗೂ ನಪುಂಸಕ ಲಿಂಗದಲ್ಲಿ अकारान्तವಾಗಿಯೂ, ಸ್ತ್ರೀಲಿಂಗದಲ್ಲಿ आकारान्त ವಾಗಿಯೂ ರೂಪಗಳನ್ನು ಪಡೆಯುತ್ತವೆ.
(5) ಚತುರ್ಥದಿಂದ ಕ್ರಮವಾಚಕಗಳು ಪುಲ್ಲಿಂಗ ಹಾಗೂ ನಪುಂಸಕ ಲಿಂಗದಲ್ಲಿ अकारान्तವಾಗಿದ್ದರೂ ಸ್ತ್ರೀಲಿಂಗದಲ್ಲಿ ईकारान्त ರೂಪಗಳನ್ನು ಪಡೆಯುತ್ತವೆ.

ಉದಾ. :—चतुर्थः, पञ्चमं, सप्तमी ಇತ್ಯಾದಿ.

## ಅಭ್ಯಾಸ

I. ಸಂಖ್ಯಾವಾಚಕ ಹಾಗೂ ಕ್ರಮವಾಚಕಗಳ ಭೇದವನ್ನು ಸೋದಾಹರಣವಾಗಿ ಸ್ಪಷ್ಟೀಕರಿಸಿರಿ.

II. ಈ ಸಂಖ್ಯಾವಾಚಕಗಳನ್ನು ಕ್ರಮವಾಚಕಕ್ಕೆ ಬದಲಾಯಿಸಿರಿ :—

द्वौ । त्रीणि । पञ्च । षट् । सप्त । दश । नवदश । शत ।

III. ಕೆಳಗಿನ ಕ್ರಮವಾಚಕಗಳನ್ನು ಸಂಖ್ಯಾವಾಚಕಗಳಾಗಿ ಪರಿವರ್ತಿಸಿರಿ.

चतुर्थः । तृतीया । षड्दशतमं । सप्तमेन । दशतमा । शततमया । त्रयोदशतमेन । प्रथमात् ।

IV. ಕೆಳಗಿನ ಪರಿಚ್ಛೇದದಲ್ಲಿ ಕ್ರಮವಾಚಕಗಳನ್ನು ಗುರುತಿಸಿ :—

प्रथमः गृहं प्राविशत् । द्वितीयेन उक्तम् । एकः तत्र नासीत् । पञ्चमः सैनिकः प्राहरत् । षड्दश जनाः मुक्ताः । विंशतितमं प्रकरणं पठामि ।

V. ಪಠ್ಯಭಾಗದಲ್ಲಿ ಬಂದಿರುವ ಸಂಖ್ಯಾವಾಚಕ ಹಾಗೂ ಕ್ರಮವಾಚಕಗಳನ್ನು ಗುರುತಿಸಿರಿ.

* * * *

# ಕ್ರಮವಾಚಕಗಳು

थम
द्वितीय
तृतीय
चतुर्थ
पञ्चम
षष्ठ
सप्तम
अष्टम
नवम
दशम
एकादशतम
द्वादशतम
त्रयोदशतम
चतुर्दशतम
पञ्चदशतम
षोडशतम
सप्तदशतम
अष्टादशतम
एकोनविंशतितम
विंशतितम
एकविंशतितम
द्वाविंशतितम
त्रयोविंशतितम

चतुर्विंशतितम
पञ्चविंशतितम
षड्विंशतितम
सप्तविंशतितम
अष्टविंशतितम
एकोनत्रिंशत्तम
त्रिंशत्तम
एकत्रिंशत्तम
द्वात्रिंशत्तम
त्रयस्त्रिंशत्तम
चतुस्त्रिंशत्तम
पञ्चत्रिंशत्तम
षट्त्रिंशत्तम
सप्तत्रिंशत्तम
अष्टात्रिंशत्तम
एकोनचत्वारिंशत्तम
चत्वारिंशत्तम
एकचत्वारिंशत्तम
द्वाचत्वारिंशत्तम
त्रयश्चत्वारिंशत्तम
चतुश्चत्वारिंशत्तम
पञ्चचत्वारिंशत्तम
षट्चत्वारिंशत्तम

सप्तचत्वारिंशत्तम
अष्टचत्वारिंशत्तम
एकोनपञ्चाशत्तम
पञ्चाशत्तम
एकपञ्चाशत्तम
द्विपञ्चाशत्तम
त्रिपञ्चाशत्तम
चतुःपञ्चाशत्तम
पञ्चपञ्चाशत्तम
षट्पञ्चाशत्तम
सप्तपञ्चाशत्तम
अष्टपञ्चाशत्तम
एकोनषष्टितम
षष्टितम
एकषष्टितम
द्विषष्टितम
त्रिषष्टितम
चतुष्षष्टितम
सप्तषष्टितम
अष्टषष्टितम
एकोनसप्ततितम
सप्ततितम
एकसप्ततितम

द्विसप्ततितम
त्रिसप्ततितम
चतुस्सप्ततितम
पञ्चसप्ततितम
षट्सप्ततितम
सप्तसप्ततितम
अष्टसप्ततितम
एकोनाशीतितम
अशीतितम
एकाशीतितम

द्व्यशीतितम
त्र्यशीतितम
चतुरशीतितम
पञ्चाशीतितम
षडशीतितम
सप्ताशीतितम
अष्टाशीतितम
एकोननवतितम
नवतितम
एकनवतितम

द्विनवतितम
त्रिनवतितम
चतुर्नवतितम
पञ्चनवतितम
षण्णवतितम
सप्तनवतितम
अष्टनवतितम
एकोनशततम
शततम

■ ■ ■ ■

WD 17/80 -GTBPM—15,000

# ಸಂಸ್ಕೃತಲಹರಿ

ಮೊದಲನೆಯ ಭಾಷೆ-ಉಪಪಠ್ಯಪುಸ್ತಕ

ಒಂಭತ್ತನೆಯ ತರಗತಿಗಾಗಿ






ಬೆಲೆ : ರೂ. 1—60